## ॥ अथमहापुरुषविद्या ॥

ॐ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ सुब्रह्मण्य नमस्तेस्तु महापुरुष पूर्वज ॥ १ ॥

नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ॥ ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे ॥ २ ॥

देवानां दानवानां च सामान्यमसि दैवतं ॥ सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ ३ ॥

एकस्त्वमसि लोकस्य स्रष्टासंहारकस्तथा ॥ अध्यक्षश्चानुमंता च गुणमायासमावृतः ॥ ४ ॥

संसारसागरं घोरमनंतं क्लेशभाजनं ॥ त्वामेव शरणं प्राप्य निस्तरन्तिमनीषिणः ॥ ५ ॥

न ते रूपं न चाकारो नायुधानि न चास्पदं ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ६ ॥

नैव किंचित्परोक्षं ते न प्रत्यक्षोसिकस्यचित् ॥ नैव किंचिदसिद्धं ते न च सिद्धोसिकस्यचित् ॥ ७ ॥

कार्याणां कारणं पूर्णं वचसां वाच्यमुत्तमं ॥ योगिनां परमां सिद्धिं वदंति परमं विदः ॥ ८ ॥

अहं भीतोस्मि देवेश संसारेऽस्मिन्भया वहे ॥ त्राहि मां पुंडरीकाक्ष न जाने शरणंपरं ॥ ९ ॥

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरेपि गतौ चापि वर्तते मे महद्भयं ॥ १० ॥

त्वत्पादकमलादन्यन्नमेजन्मांतरेष्वपि ॥ निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिं ॥ ११ ॥

विज्ञानं यदिदंप्राप्तं यदिदं ज्ञानमर्जितं ॥ जन्मांतरेपि मे देव माभूदस्य परिक्षयः ॥ १२ ॥

दुर्गतावपिजातायां त्वंगतिस्त्वंमतिर्मम ॥ यदि नाथं च विंदेयं तावतास्मि कृती सदा ॥ १३ ॥

अकाम कलुषं चित्तं ममते पादयोः स्थितं । कामये वैष्णव त्वं तु सर्वजन्मसु केवलं ॥ १४ ॥

पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करं ॥ आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परं ॥ १५ ॥

इत्येव मनयास्तुत्या स्तुत्वा देवं जनार्दनं ॥ किं करोस्मीति चात्मानं देवायैव निवेदयेत् ॥ १६ ॥

## इति महापुरुषविद्यासमाप्ता ॥